श्रीगणेशायनमः ॥ श्रीउमामहेश्वराभ्यांनमः ॥ ॥ अथभाद्रपदशुक्लतृतीयायां
दाक्षिणात्यशिष्टपरिगृहीतंहरितालिकाव्रतम् ॥ तच्चपरविद्धायांकार्यम् ॥ मुहूर्तमा
त्रसत्त्वेपिदिनेगौरीव्रतंपरेइतिमाधवोक्तेः । हरितालिकाव्रतसत्त्वेपुरस्कारेणापिप
रविद्धग्रहणवचनाद्दिवोदासीयेउदाहृतत्वाच्च ॥ ॥ तत्रव्रतविधिः ॥ भाद्रपदशुद्धतृ
तीयायांप्रातस्तिलामलककल्केनस्नात्वापट्टवस्त्रंपरिधाय ॥ ॥ मूर्तौप्राणप्रतिष्ठांकु
र्यात् ॥ ॥ सुमुखश्चेत्यादि० ॥ विष्णुर्विष्णुः ॥ श्रीम० एवंगुणविशेषणविशिष्टा
यांशुभपुण्यतिथौममआत्मनःपुराणोक्तफलप्राप्त्यर्थंममइहजन्मनिजन्मांतरेच स
मस्तपापक्षयपूर्वकसप्तजन्मराज्याखंडितसौभाग्यपुत्रपौत्रादिवृद्ध्यउमामहेश्वरदे
वताप्रीत्यर्थं प्रतिवार्षिकविहितहरितालिकाव्रतांगत्वेनयथाज्ञानेनयथामीलितषो
डशोपचारैःपूजनमहंकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंमहागणपतिपूजनंचक
रिष्ये ॥ तथाचआसनविधिं कलशाराधनंघंटापूजनंचकरिष्ये॥वक्रतुंड०इतिमंत्रे
णगणेशपूजनम् ॥ अपसर्पंतुतेभूताइत्यासनविधिंकृत्वा ॥ कलशस्यमुखेविष्णुः०

इतिकलशपूजनम् ॥ आगमार्थंतुदेवानामित्यादिघंटापूजनंचकुर्यात् ॥ ततः ॥
अपवित्रःपवित्रोवा० इतिमंत्रेणपूजाद्रव्याणिसंप्रोक्ष्य आत्मानंचप्रोक्षेत् ॥ ॥ अ
थध्यानम् ॥ ॥ पीतकौशेयवसनांहेमाभांकमलासनाम् ॥ भक्तानांवरदांनित्यंपा
र्वतींचिंतयाम्यहम् ॥ विधायवालुकालिंगमर्चयंतींमहेश्वरम् ॥ पूर्णेंदुवदनांध्याये
द्धरितालींवरप्रदाम् ॥१॥ मंदारमालाकुलितालकायैकपालमालांकितशेखराय ॥
दिव्यांबरायैचदिगंबरायनमःशिवायैचनमःशिवाय ॥ श्रीउमामहेश्वराभ्यांनमः
ध्यायामि ॥ देविदेविसमागच्छप्रार्थयेहंजगन्मये ॥ इमांमयाकृतांपूजांगृहाणसुर
सत्तमे ॥ श्रीउमामहेश्वराभ्यां० ॥ आवाहयामि ॥ भवानित्वंमहादेविसर्वसौभाग्य
दायके ॥ अनेकरत्नसंयुक्तमासनंप्रतिगृह्यताम् ॥ श्रीउमामहे० ॥ आसनंसम० ॥
सुचारुशीतलंदिव्यंनानागंधसमन्वितम् ॥ पाद्यंगृहाणदेवेशिमहादेविनमोस्तुते ॥
श्रीउमाम० ॥ पाद्यंस० ॥ श्रीपार्वतिमहाभागेशंकरप्रियवादिनि ॥ अर्घ्यंगृहाणक
ल्याणिभर्त्रासहपतिव्रते ॥ श्रीउमा० ॥ अर्घ्यंस० ॥ गंगाजलंसमानीतंसुवर्णकलशे

स्थितम् ॥ आचम्यतांमहाभागेरुद्रेणसहितेनघे ॥ श्रीउमाम० ॥ आचमनीयंस० ॥
दध्याज्यमधुसंयुक्तंमधुपर्कंमयानघे ॥ दत्तंगृहाणदेवेशिभवपाशविमुक्तये ॥ श्री
उमाम० ॥ मधुपर्कंस० ॥ गंगासरस्वतीरेवापयोष्णीनर्मदाजलैः ॥ स्नापितासि
मयादेवितथाशांतिंकुरुष्वमे ॥ उमामहेश्वरा० ॥ मलापकर्षस्नानंस० ॥ सौरभेयं
महद्दिव्यंपवित्रंपुष्टिवर्धनं ॥ स्नानार्थंतेमयादत्तंदुग्धंगृह्णीष्वतेनमः ॥ श्रीउमाम
हे० ॥ पयःस्नानंस० ॥ स्नानानंतरंशुद्धोदकस्नानंस० ॥ सकलपूजार्थेअक्षतान्
स० ॥ जगदेतद्दधासित्वंत्वमेवजगतांहितम् ॥ मयानिवेदितंभक्त्यादधिस्नानायगृ
ह्यतां ॥ श्रीउमामहेश्व० ॥ दधिस्नानानंसमर्पया० ॥ दधिस्नानानं० ॥ घृतकुंभसमा
युक्तंघृतयोनेघृतप्रिये ॥ घृतभुग्घृतधामासिघृतंस्नानायगृह्यताम् ॥ श्रीउमाम० ॥
घृतस्नानंस० घृतस्नानानं० ॥ सर्वौषधिसमुत्पन्नंपीयूषसदृशंमधु ॥ स्नानायतेम
यादत्तंगृहाणपरमेश्वरि ॥ श्रीउमाम० ॥ मधुस्नानंसमर्प० ॥ मधुस्नानानं० ॥ इ
क्षुदंडसमुत्पन्नारस्यास्निग्धतराशुभा ॥ शर्करेयंमयादत्तास्नानार्थंप्रतिगृह्यताम् ॥

श्रीउमाम० ॥ शर्करास्नानं० शर्करास्नानानं० ॥ काश्मीरागरुकस्तूरीकर्पूरमल
यान्वितम् ॥ उद्वर्तनंमयादत्तंगृह्यतांपरमेश्वरि ॥ श्रीउमाम० ॥ उद्वर्तनंस० ॥
कर्पूरैलाकुंकुमादिसुगंधिद्रव्यसंयुतम् ॥ गंधोदकमुमेशुद्धंस्नानार्थंप्रतिगृह्यताम्॥
श्रीउमाम०॥गंधोदकस्नानंस०॥ गंधोधकस्नानानंतरंशुद्धोदकस्नानंसमर्पयामि॥
आचमनंस० ॥ ततः श्रीउमामहेश्वराभ्यांनमइति गंधादिनासंपूज्य ॥ उत्तरेनि
र्माल्यंविसृज्य ॥ किरणाधूतपापाचपुण्यतोयासरस्वती ॥ मणिकर्णीजलंशुद्धं
स्नानार्थंप्रतिगृह्यताम् ॥ महिम्नःपारंते०इतिस्तोत्रेणमहाभिषेकंकुर्यात् ॥ श्रीउमा
महेश्वराभ्यांनमः महाभिषेकस्नानंसमर्पयामि ॥ अभिषेकस्नानानंतरंआचमनीयं
स० ॥ सर्वभूषाधिकेसौम्येलोकलज्जानिवारणे ॥ मयोपपादितेतुभ्यंवाससीप्रति
गृह्यताम् ॥ श्रीउमा० ॥ वस्त्रोपवस्त्रेस० ॥ मंत्रमयंमयादत्तंपरब्रह्ममयंशुभम् ॥
उपवीतमिदंसूत्रंगृहाणजगदंबिके ॥ श्रीमहेश्वराय० ॥ उपवीतंस० ॥ कुंकुमाग
रुकर्पूरकस्तूरीचंदनैर्युतम् ॥ विलेपनंमहादेवितुभ्यंदास्यामिभक्तितः ॥ श्रीउमा





म० ॥ चंदनंस० ॥ रंजिताःकुंकुमौघेनअक्षताश्चातिशोभनाः ॥ भक्त्यासमर्पि
तास्तुभ्यंप्रसन्नाभवपार्वति ॥ श्रीउमाम० ॥ अक्षतान्स०॥ हरिद्राकुंकुमंचैवसिं
दूरंकज्जलान्वितम् ॥ सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वरि ॥ श्रीउमायैनमः ॥
सौभाग्यद्रव्याणिस०॥(अथवासौभाग्यद्रव्याणांसमर्पणेपृथक्पृथक्मंत्रायोज्याः।
तेयथा ॥ नवरत्नादिभिर्बद्धांसौवर्णेनचतंतुभिः ॥ निर्मितांकंचुकींभक्त्यागृहाण
परमेश्वरि ॥ श्रीउमायैनमः॥ कंचुकींसम० ॥ पट्टसूत्रभवंदिव्यंस्वर्णादिमणिभि
र्युतम् ॥ सौमंगल्याभिवृद्ध्यर्थंकंठसूत्रंददामिते ॥ श्रीउमायैनमः ॥ कंठसूत्रंस० ॥
ताडपत्राणिदिव्यानिविचित्राणिशुभानिच ॥ कराभरणयुक्तानिगौरित्वंप्रतिगृह्य
ताम् ॥ श्रीउमायै० ॥ ताडपत्रंस० ॥ हरिद्रारंजितादिव्यासुखसौभाग्यसंपदा ॥
अतस्त्वांपूजयिष्यामिगृहाणपरमेश्वरि ॥ श्रीउमायै० ॥ हरिद्रांसमर्पयामि ॥ कुं
कुमंकामदंदिव्यंकामिनीकामसंभवं ॥ कुंकुमेनार्चितेदेविसौभाग्यंप्रतिगृह्यताम्॥
श्रीउमायै० ॥ कुंकुमंसम० ॥ सुनीलभ्रमराभासंकज्जलंनेत्रमंडनम् ॥ मयादत्तमि

दंभक्त्याकज्जलंप्रतिगृह्यताम् ॥ श्रीउमायै० कज्जलंसम० ॥ विद्युदरुणसंकाशंज पाकुसुमसन्निभम् ॥ सिंदूरादिप्रदास्यामिसौभाग्यंदेहिमेचिरम् ॥ श्रीउमायै० ॥ सिंदूरंस० ॥ ) स्वभावसुंदरांगीत्वंनानारत्नादिभिर्युता ॥ भूषणानिविचित्राणि प्रीत्यर्थंप्रतिगृह्यताम् ॥ श्रीउमाम० ॥ आभरणानि० ॥ नानासुगंधिकंद्रव्यंचू र्णीकृत्वाप्रयत्नतः ॥ ददामितेमहादेविप्रीत्यर्थंप्रतिगृह्यताम् ॥ श्रीउमा० ॥ नाना परिमलद्रव्यंसमर्पयामि ॥ करवीरैर्जातिकुसुमैश्चंपकैर्बकुलैःशुभैः ॥ शतपत्रैश्चक ह्लारैरर्चयेपरमेश्वरि ॥ सेवंतिकाबकुलचंपकपाटलाब्जपुन्नागजातिकरवीररसा लपुष्पैः ॥ बिल्वप्रवालतुलसीदलमालतीभिस्त्वांपूजयामिजगदीश्वरिमेप्रसीद ॥ नानाविधानिपुष्पाणिअनेकैःपुष्पजातिभिः ॥ मयासमर्पितानित्वंगृहाणपरमेश्व रि ॥ श्रीउमामहे० ॥ पुष्पाणि० ॥ ॥ अथांगपूजा ॥ ॥ उमायैनमः पादौपूज यामि ॥ गौर्यैन० गुल्फौपू० ॥ पार्वत्यै०जानुनीपू०॥जगद्धात्र्यै० जंघेपू० ॥ ज गत्प्रतिष्ठायै०ऊरूपू० ॥ शांतिरूपिण्यै० कटिंपू० ॥ हरायै० गुह्यंपूज० ॥ माहे



श्वर्यै० नाभिंपूज० ॥ शांभव्यै० हृदयंपू० ॥ ॥ शूलपाणये० कंठंपूज० ॥ पि नाकधृषे० बाहूपू० ॥ शिवायै० मुखंपू० ॥ पशुपतिप्रियायै० नेत्रेपू० ॥ गंगायै० ललाटंपू०॥ महालावण्यायै० शिरःपू० ॥ सच्चिदानंदरूपिण्यै० सर्वांगंपू० ॥ ॥ अथपत्रपूजा ॥ ॥ अशोकायैनमः अशोकपत्रंसमर्पयामि ॥ जगद्धात्र्यै० धा त्रीप० ॥ माहेश्वर्यैन० दूर्वाप० ॥ कपर्दिन्यै० करवीरप० ॥ कपालधारिण्यै० कदंबप० ॥ पार्वत्यै० ब्राह्मीप० ॥ धूर्जटायै० धत्तूरप० ॥ त्रिपुरांतकायै० अपामा र्गप० ॥ सर्वेश्वर्यै० नानाविधपत्राणिसमर्पयामि ॥ ॥ अथपुष्पपूजा ॥ ॥ चतुर्वर्गप्रदायैनमः चंपकपुष्पंस० ॥ बुद्धिप्रियायैन० केतकीपुष्पंस० ॥ कौमार्यै न० करवीरपु० ॥ कुमार्यैन० बकुलपुष्पंस० ॥ धनदायैनमः धत्तूरपुष्पंस०॥ शां भव्यैनमः शतपत्रपुष्पंस० ॥ चामुंडायै० पद्मपुष्पंस० ॥ जगद्धात्र्यैनमः जपापुष्पं स० ॥ माहेश्वर्यैनमः मल्लिकापुष्पंस० ॥ मेरुमांदारवासिन्यैनमः अशोकपुष्पंस० ॥ ॥ अथनामपूजा ॥ उमायैनमः ॥ कात्यायन्यैनमः ॥ गौर्यैनमः ॥ काल्यै

नमः ॥ हिमवत्यैनमः ॥ शिवायैनमः ॥ भवान्यैनमः ॥ रुद्राण्यैनमः ॥ सर्वमंग-
लायैनमः ॥ अपर्णायैनमः ॥ पार्वत्यैनमः ॥ दुर्गायैनमः ॥ मृडान्यैनमः ॥ चामुंडा
यैनमः ॥ कौबेर्यैनमः ॥ भगवत्यैनमः ॥ सरस्वत्यैनमः ॥ शारदायैनमः ॥ वागी
श्वर्यैनमः ॥ चंडिकायैनमः ॥ अंबिकायैनमः ॥ आर्यायैनमः ॥ दाक्षायण्यैनमः॥
गिरिजायैनमः ॥ मेनकात्मजायैनमः ॥ पद्मिन्यैनमः ॥ पद्माकरवासिन्यैनमः ॥
महिषमर्दिन्यैनमः ॥ सिंहवाहिन्यैनमः ॥ शक्तिदायैनमः ॥ ललितायैनमः ॥ ॥
त्रिदलंत्रिगुणाकारंत्रिनेत्रंचत्रयायुधम् ॥त्रिजन्मपापसंहारमेकबिल्वंशिवार्पणम्॥
तुलसीबिल्वनिर्गुंडीजंबीरामलकंतथा ॥ पंचबिल्वमितिख्यातमेकबिल्वंशिवार्प
णम् ॥ (शिवाष्टोत्तरशतनामभिर्बिल्वदलैःसमर्चयेत् )॥ श्रीउमाम० ॥ बिल्वपत्रा
णिस० ॥ देवद्रुमरसोद्भूतःकृष्णागरुसमन्वितः ॥ आनीतोयंमयाधूपोभवानिप्रति
गृह्यताम् ॥ श्रीउमाम० ॥ धूपंस० ॥ त्वंज्योतिःसर्वदेवानांतेजसांतेजउत्तमम् ॥
आत्मज्योतिःपरंधामदीपोयंप्रतिगृह्यताम्॥ श्रीउमाम०॥दीपंस० ॥ अन्नंचतुर्विधं



चारुरसैःषड्भिःसमन्वितम्॥ भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यताम्॥ श्रीउमा
म०॥ अमुकनैवेद्यंसमर्पयामि ॥ प्राणायनमः ६ ॥ नमस्तेदेवदेवेशिसर्वतृप्तिकरंप
रम् ॥ मयानिवेदितंतुभ्यंगृहाणजलमुत्तमम्॥ श्रीउमाम० ॥ मध्येपानीयंस० ॥
पुनः प्राणायनमः ६॥ उत्तरापोशनंस० ॥ हस्तप्रक्षालनंस०॥ मुखप्रक्षालनंस० ॥
आचमनीयंस० ॥ मलयाचलसंभूतंकर्पूरेणसमन्वितम् ॥ करोद्वर्तनकंचारुगृह्य
तांजगतःपते ॥ करोद्वर्तनार्थेचंदनंस० ॥ कर्पूरैलालवंगादितांबूलीदलसंयुतम्॥
क्रमुकस्यफलंचैवतांबूलंप्रतिगृह्यताम् ॥ श्रीउमाम० ॥ तांबूलंस० ॥ इदंफलंम
यादेविस्थापितंपुरतस्तव ॥ तेनमेसुफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥ श्रीउमा०॥
फलंस० ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतःशां
तिंप्रयच्छमे ॥ श्रीउमा० ॥सुवर्णपुष्पदक्षिणांस० ॥ वज्रमाणिक्यवैडूर्यमुक्ताविद्रु
ममंडितम् ॥ पुष्परागसमायुक्तंभूषणंप्रतिगृह्यताम् ॥ श्रीउमाम०॥भूषणंस०॥ चं
द्रादित्यौचधरणीविद्युदग्निस्तथैवच॥त्वमेवसर्वज्योतींषिआर्तिक्यंप्रतिगृह्यताम् ॥

श्रीउमाम० ॥ नीराजनंस० ॥ कर्पूरार्तिक्यंचस० (सतिसंभवेराजोपचारार्पणम् ॥ तद्यथा ॥ स्तुतिभिःसहितंगीतंनिर्मितंदिव्यमुत्तमम् ॥ नित्यशःकल्पितंभक्त्यागृहाणकरुणानिधे ॥ श्रीउमामहेश्वरा०॥गीतंस० ॥ वीणातालमृदंगादिखंडभेरीचघंटिका ॥ दुंदुभिर्वेणुनादश्चश्रूयतांसुरसत्तमे ॥ श्रीउमाम० ॥ वाद्यंस० ॥ उभयोश्चरणेबध्वाक्षुद्रघंटाःसुभक्तितः ॥ तुष्ट्यर्थंसर्वदेवानांकृतंनृत्यंविलोकय॥ श्रीउमाम० ॥ नृत्यंसमर्प० ॥ हरिन्मणिगणाबद्धंदंडशक्तिकरप्रभम् ॥ सुवर्णछत्रंशोभाढ्यंगृहाणकरुणानिधे ॥ श्रीउमाम०॥छत्रंस०॥सुवेणुदंडसंयुक्तंचमर्याःकेशसंयुतम् ॥ चामरंकल्पितंभक्त्यागृहाणसुरसत्तमे ॥ श्रीउमा० ॥ चामरंस० ॥ सवितृकिरणस्पर्धिस्फुरत्किरणमंडलम् ॥ आदर्शंमणिभिर्युक्तंप्रतिरूपंविलोकय ॥ श्रीउमाम० ॥ दर्पणंस० ॥ प्रवालनालसद्गात्रेमुक्तामणिविभूषिते॥पट्टसूत्रमयेदेविमंचकेशयनंकुरु ॥ श्रीउमाम० ॥ मंचकंस०॥उशीरनिर्मितंदिव्यंहेमदंडसमन्वितम्॥ व्यजनंचमयादत्तंगृहाणपरमेश्वरि ॥ श्रीउ० व्यजनंस० ॥ सर्वराजोपचारान्कल्पयामि ॥ )

नमःसर्वहितार्थायजगदाधारहेतवे ॥ उमाकांतायशांतायशंकरायनमोनमः ॥ उमाम०॥नमस्कारंस०॥यानिकानिचपापानिब्रह्महत्यासमानिच ॥ तानिसर्वाणिनश्यंतुप्रदक्षिणपदेपदे ॥ श्रीउमा०॥प्रदक्षिणाःस० ॥ ॥ अथनामपूजा ॥ उमायैनमः ॥ गौर्यै० ॥ पार्वत्यै० ॥ जगद्धात्र्यै० ॥ जगत्प्रतिष्ठायैनमः ॥ हराय० ॥ महेश्वराय० ॥ शंभवेनमः ॥ शूलपाणये० ॥ पिनाकधृषे० ॥ शिवाय० ॥ पशुपतये० ॥ महादेवाय० ॥ श्रीउमाम० ॥ मंत्रपुष्पांजलिंस०॥ ॥अथप्रार्थना ॥ ॥ हरितालिनमस्तेस्तुसशिवेभक्तवत्सले ॥ संसारभयभीताहंत्वमेवशरणंमम ॥ जन्मजन्मनिसौभाग्यमक्षय्यंदेहिमेऽव्यये ॥ यशस्विनमुदारंचगांभीर्यादिगुणान्वितं ॥ सदाचारपरंशांतंविष्णुभक्तिपरायणम् ॥ शिवभक्तिपरंचैववेदशास्त्रविशारदम् ॥ लक्ष्मीवंतंपुत्रवंतमारोग्यादिगुणान्वितं ॥ भर्तारंदेहिमेदेविप्रीतिमंतंसदामयि॥ तथापुत्रांश्चपौत्रांश्चकन्याश्चान्वयशोभिनीः ॥ धनधान्यादिसंपत्तिमैश्वर्यंरुचिरंशिवे ॥ लक्ष्मींमनोरमांदेहिसुरूपाद्यखिलान्गुणाम् ॥ धर्मबुद्धिंचमेदेहिपातिव्रत्य

मखंडितम् ॥ भोगान्सुविपुलान्शश्वदिहलोकेपरत्रच ॥ त्वयिभक्तिंचमेदेहिभृशं भर्तरिशंकरे ॥ संसारहारिणींबुद्धिमंतेदेहिनमोस्तुते ॥ तवसान्निध्यमेवास्तुममश्री हरितालिके ॥ यथात्वंदेवदेवेशिसौभाग्यादिसमन्विता॥ तथामांकुरुसर्वेशिजन्म जन्मनिपार्वति ॥आवाहनंनजाना० ॥ मंत्रहीनंक्रियाहीनं० ॥ अन्यथाश० ॥ गतंपापंगतं०॥ रूपंदेहि० ॥ श्रीउमाम० ॥ प्रार्थनांस० ॥ अनेनयथाज्ञानेनयथा मीलितोपचारपूजनेनश्रीउमामहेश्वरौप्रीयेतांनमम ॥ अद्यपूर्वोच्चरितए० पुराणो क्तफलप्राप्त्यर्थंहरितालिकाव्रतांगत्वेनपूजासांगतासिद्ध्यर्थंब्राह्मणायवायनप्रदानं करिष्ये ॥ तदंगंब्राह्मणपूजनंचकरिष्ये ॥ महाविष्णुस्वरूपिणेब्राह्मणायइदमास नम् ॥ स्वासनं ॥ इदंपाद्यं ॥ सुपाद्यं ॥ इदमर्घ्यं ॥ अस्त्वर्घ्यं ॥ इदमाचमनीयं॥ अस्त्वाचमनियं ॥ गंधाःपांतु ॥ सौमंगल्यंचास्तु ॥ अक्षताःपांतु ॥ आयुष्यम स्तु ॥ पुष्पाणिपांतु ॥ संश्रेयोस्तु ॥ तांबूलंपातु ॥ ऐश्वर्यमस्तु ॥ दक्षिणाःपांतु॥ बहुदेयंचास्तु ॥ नमोस्त्वनंतायसहस्रमूर्तयेसहस्रपादाक्षिशिरोरुबाहवे ॥सहस्रना

म्नेपुरुषायशाश्वतेसहस्रकोटीयुगधारिणेनमः ॥ इतिमंत्रेणाक्षतान्दद्यात् ॥ वाय नदानमंत्रः ॥ उपायनमिदंदेवव्रतसंपूर्तिहेतवे ॥ वायनंद्विजवर्यायसहिरण्यंददा म्यहं ॥ १ ॥ अन्नंसुवर्णपात्रस्थंसवस्त्रफलदक्षिणं ॥ वायनंगौरिविप्रायददामिप्री तयेतव ॥ २ ॥ सौभाग्यारोग्यकामानांसर्वसंपत्समृद्धये ॥ गौरीगिरीशतुष्ट्यर्थं वायनंतेददाम्यहं ॥३॥ विप्रायवेदविदुषेश्रोत्रियायकुटुंबिने ॥ नरकोत्तारणार्थाय द्यच्युतःप्रीयतामिति ॥ ४ ॥ इदंअमुकवायनप्रदानंसदक्षिणाकंसतांबूलंअमु कशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ प्रतिगृह्यतां ॥ प्रतिगृह्णामि ॥ तेनश्रीउमा महेश्वरौप्रीयेतां ॥ ॥ तस्मिन्नहनिकर्तव्यंपूजनंरजनीमुखे ॥ अर्धरात्रेउमाकां तस्यार्चनंजागरंचरेत् ॥ ततःप्रभातेपंचोपचारैःउत्तरपूजांकृत्वा ॥ यांतुदेवगणाः सर्वेपूजामादायपार्थिवात् ॥ इष्टकामप्रसिद्ध्यर्थंपुनरागमनायच ॥ इतिमंत्रेणवि सर्जनंकुर्यात्॥ ॥इतिहरितालिकापूजासमाप्ता ॥ ॥ श्रीकृष्णार्पणमस्तु ॥

॥ इति पूजा समाप्ता ॥

श्रीगणेशाय नमः ॥ शौनकादि ऋषींप्रत हरितालिकाव्रतकथा सांगण्याकरितां सूत आरंभीं मंगल करितात. मंदारवृक्षांच्या फुलांच्या मालांनीं जिचे केस सुशोभित आहेत, व जिनें दिव्य वस्त्र परिधान केलें आहे, अशी भगवती पार्वती आणि नरकपालमालांनीं युक्त आहे शिरोभूषण ज्याचें व स्वतः दिगंबर असणारा असा जो भगवान् शंकर, त्या दोघांला नमस्कार करितों ॥ १ ॥ याप्रमाणें उमामहेश्वरांस वंदून सूत ह्मणतात ऋषिहो, कोणे एके समयीं रम्य अशा

अथकथा ॥ ॥ सूतउवाच ॥ ॥ मंदारमालाकुलितालकायैकपालमालांकितशेखराय ॥ दिव्यांबरायैचदिगंबरायनमःशिवायैचनमःशिवाय ॥१॥ कैलासशिखरेरम्येगौरीपृच्छतिशंकरम् ॥ गुह्याद्गुह्यतरंगुह्यंकथयस्वमहेश्वर ॥२॥ सर्वेषांसर्वधर्माणामल्पायासंमहत्फलम् ॥ प्रसन्नोसियदानाथतथ्यंब्रूहिममाग्रतः ॥३॥

कैलासपर्वताच्या शिखरावर पार्वती व शिव हीं उभयतां आनंदानें बसलेलीं असतां पार्वती शिवाप्रत प्रश्न करिते कीं, हे महेश्वरा, सर्व गुह्यांहून गुह्य असें जें कांहीं असेल तें तुह्मी मला कृपा करून सांगा ॥ २ ॥ कीं ज्याच्या योगानें सर्वांस सकल धर्मांचें महत्फल थोड्या श्रमानें मिळेल. प्रभो, जर तुह्मी मजवर प्रसन्न आहां तर मुख्य गुह्य काय तें मला खरें सांगा ॥ ३ ॥



आणि तुह्मी आदि, मध्य व अंत यांनीं रहित व सर्व जगाचे प्रभु असे असूनही मला पति मिळालेत तर मी कोणतें तप, दान, व्रतादि पुण्यकर्म केल्यानें मिळालेत तेंही मला सांगा ॥ ४ ॥ याप्रमाणें गौरीचा प्रश्न ऐकून भगवान् शंकर ह्मणतातः हे देवि, तुला एक उत्तम व्रत सांगतों तें श्रवण कर. जें व्रत अत्यंत गुप्त असून केवळ माझें सर्वस्व आहे. तें, प्रिये, तुला सांगतों ॥ ५ ॥ पहा

केनत्वंहिमयाप्राप्तस्तपोदानव्रतादिना ॥ अनादिमध्यनिधनोभर्ताचैवजगत्प्रभुः ॥ ४ ॥ ॥ ईश्वरउवाच ॥ ॥ श्रृणुदेविप्रवक्ष्यामितवाग्रेव्रतमुत्तमम् ॥ यद्गोप्यंममसर्वस्वंकथयामितवप्रिये ॥ ५ ॥ यथाचोडुगणेचंद्रोग्रहाणांभानुरेवच ॥ वर्णानांचयथाविप्रोदेवानांविष्णुरेवच ॥६॥ नदीषुचयथागंगापुराणानांचभारतम्[1] ॥ वेदानांचयथासामइंद्रियाणांमनोयथा ॥ ७ ॥

कीं, जसा नक्षत्रांच्या समुदायांत चंद्र श्रेष्ठ, नवग्रहांत सूर्य श्रेष्ठ, सर्व वर्णांत ब्राह्मण श्रेष्ठ, व सर्व देवांत विष्णु श्रेष्ठ ॥ ६ ॥ व सर्व नद्यांत गंगा श्रेष्ठ, सर्व पुराणांत भारत श्रेष्ठ, सर्व वेदांत सा-

१ भारताची अठरा पुराणांत गणना नाहीं तथापि पुराण ह्मणजे प्राचीन कथानकें असा अर्थ घेऊन येथें पुराणांत असें ह्मटलें आहे.

ह्रिता.

॥ ८ ॥

मवेद श्रेष्ठ, जसें सर्व इन्द्रियांत मन श्रेष्ठ ॥ ७ ॥ तसें सर्व व्रतांत हें व्रत उत्तम आहे; हें सर्व पुराणांचें व वेदांचें रहस्य असून आगमांत यथासांग जसें वर्णिलें व जसें मीं पुरातन पाहिलें आहे तसें मी तुला सांगतों तें श्रवण कर ॥ ८ ॥ ज्या व्रताच्या प्रभावानें तुला माझें अर्धासन मिळालें तें सर्व व्रत तूं माझी अत्यंत आवडती आहेस ह्मणून तुला मी सांगतों ॥ ९ ॥ भाद्रपद-

कथा.

पुराणवेदसर्वस्वमागमेनयथोदितम् ॥ एकाग्रेणशृणुष्वैतत्यथादृष्टंपुरातनम् ॥ ८ ॥ येनव्रतप्रभावेणप्राप्तमर्धासनंमम ॥ तत्सर्वंकथयिष्येहंत्वंममप्रेयसी यतः ॥ ९ ॥ भाद्रेमासिसितेपक्षेतृतीयाहस्तसंयुता ॥ तस्यानुष्ठानमात्रेणस र्वपापैःप्रमुच्यते ॥ १० ॥ शृणुदेवित्वयापूर्वंयद्व्रतंचरितंमहत् ॥ तत्सर्वंकथ यिष्यामियथावृत्तंहिमालये ॥ ११ ॥ पार्वत्युवाच ॥ ॥ कथंकृतंमया नाथव्रतानामुत्तमंव्रतम् ॥ तत्सर्वंश्रोतुमिच्छामित्वत्सकाशान्महेश्वर ॥१२॥

॥ ८ ॥

शुद्ध तृतीया तिथि हस्तनक्षत्रयुक्त असली ह्मणजे त्या दिवशीं हें व्रत केलें असतां सर्व पापांपासून मनुष्य मुक्त होतो ॥ १० ॥ हे देवि, पूर्वी जें मोठें व्रत त्वां आचरिलें व हिमालयावर जें वर्तमान घडलें तें सर्व तुला कथन करितों ॥ ११ ॥ पार्वती ह्मणाली, हे नाथ, सर्व व्रतांमध्यें उ-

त्तम असें जें व्रत तें मीं कसें केलें हें आपल्यापासून सर्व ऐकण्याची इच्छा करित्यें ॥ १२ ॥ शंकर ह्मणाले, पृथ्वीवर हिमवान् नांवाचा श्रेष्ठ व अति सुंदर असा एक पर्वत आहे, तो अनेक प्रकारच्या भूमींनीं युक्त असून नानाप्रकारच्या वृक्षांनीं व्याप्त आहे ॥ १३ ॥ व नानाप्रकारच्या पक्ष्यांनीं युक्त असून अनेक प्रकारच्या मृगांनीं चित्रविचित्र दिसत आहे. तेथें गंधर्वांसहवर्तमान इंद्रादि

॥ शिवउवाच ॥ ॥ अस्तितत्रमहादिव्योहिमवान्नगउत्तमः ॥ नानाभूमि समाकीर्णोनानाद्रुमसमाकुलः ॥ १३ ॥ नानापक्षिसमायुक्तोनानामृगवि चित्रितः ॥ यत्रदेवाःसगंधर्वाःसिद्धचारणगुह्यकाः ॥ १४ ॥ विचरंतियथादे विगंधर्वध्वनिसंकुलाः ॥ स्फाटिकैःकांचनैःशृंगैर्वैडूर्यमणिभूषितैः ॥ १५ ॥ भुजैर्लिखन्निवाकाशंसुहृदोमंदिरंयथा ॥ हिमेनपूरितोनित्यंगंगाध्वनिविना दितः ॥ १६ ॥

देव व सिद्ध चारण गुह्यक ॥ १४ ॥ हे गंधर्वांच्या गायनाच्या मधुरध्वनीनें युक्त होत्साते चहूंकडे संचार करिताहेत. आणि हे देवि, वैडूर्य मण्यांनीं सुशोभित अशा स्फटिकमय व सुवर्णमय शिखररूपी ॥ १५ ॥ भुजांनीं आकाशरूप भिंतीस जणूं चित्रवितच आहे काय? असा

अत्यंत उंच व राहण्यास केवल मित्रमंदिरासारखा, आनंददायक, नेहमीं बर्फानें आच्छादलेला, गंगेच्या ध्वनीनें नादयुक्त असणारा असा आहे ॥ १६ ॥ हे पार्वती, अशा त्या पर्वतावर त्वां लहानपणीं मोठें उत्कृष्ट तप केलें तें असें कीं, बारा वर्षेपर्यंत अधोमुख राहून धूम्रपान केलें ॥ १७ ॥ नंतर चौसष्ट वर्षेपर्यंत झाडांचीं पिकलेलीं पानें खाऊन राहिलीस. माघ महिन्यांत

**पार्वतित्वंयथाबाल्येपरमाचरतीतपः ॥ अब्दद्वादशकंदेविधूम्रपानमधोमुखी ॥ १७ ॥ संवत्सरचतुःषष्टिपक्वपर्णाशनंकृतम् ॥ माघमासेजलेमग्नावैशाखे चाग्निसेविनी ॥ १८ ॥ श्रावणेचबहिर्वासाअन्नपानविवर्जिता ॥ दृष्ट्वातातेन तत्कष्टंचिंतयादुःखितोभवत् ॥ १९ ॥ कस्मैदेयामयाकन्याएवंचिंतातुरोभवत् तदैवांबरतःप्राप्तोब्रह्मपुत्रस्तुधर्मवित् ॥ २० ॥**

उदकांत मग्न होऊन रहावें, वैशाखांत पंचाग्निसाधन करावें ॥१८॥ पावसाळ्यांत अन्नोदक सोडून उघड्यावर बसावें; याप्रमाणें कित्येक वर्षे गेलीं. तेव्हां तुझा पिता हिमाचल परमकष्टकारक असें तें तुझें तप पाहून चिंताक्रांत होऊन मोठा दुःखित झाला ॥ १९ ॥ आणि आतां म्यां ही आपली कन्या कोणाला द्यावी अशी काळजी करूं लागला, तेव्हां मोठा धर्मवेत्ता ब्रह्मदेवाचा पुत्र



नारद तेथें एकाएकीं आकाशमार्गानें आला ॥ २० ॥ मुनिश्रेष्ठ नारद आपल्या मुलीस पाहण्याच्या हेतूनें आला, हें पाहून हिमाचल त्याला आसन, अर्घ्य, पाद्य इत्यादि उपचार अर्पण करून सत्कारपूर्वक बोलला ॥ २१ ॥ हिमाचल ह्मणतो, हे स्वामिन् ऋषिश्रेष्ठा, आज आपण कोणत्या हेतूनें येथें आलांत तें मला सांगा. आज माझें मोठें भाग्य उदय पावलें ह्मणून येथें हें

**नारदोमुनिशार्दूलःशैलपुत्रीदिदृक्षया ॥ दत्वार्घ्यविष्टरंपाद्यंनारदायोक्तवान् गिरिः ॥ २१ ॥ ॥ हिमवानुवाच ॥ ॥ किमर्थमागतःस्वामिन्वदस्वमु निसत्तम ॥ महद्भाग्येनसंजातंत्वदागमनमुत्तमम् ॥ २२ ॥ नारदउवाच ॥ शृणुशैलेंद्रमद्वाक्यंविष्णुनाप्रेषितोस्म्यहम् ॥ योग्यंयोग्यायदातव्यंकन्यार त्नमिदंत्वया ॥ २३ ॥**

आपलें उत्तम आगमन झालें ॥ २२ ॥ हिमाचलाचें भाषण ऐकून नारद ह्मणाला. गिरिराजा, मी कां आलों तें सांगतों श्रवण कर. मला भगवान् विष्णूनें पाठविलें आहे, कारण कीं योग्यपुरुषाला योग्य वस्तु द्यावी हें अवश्य आहे; तेव्हां स्त्रियांत रत्नभूत जी ही तुझी योग्य कन्या

ही त्वां योग्यालाच द्यावी ॥ २३ ॥ ब्रह्मा शिव इत्यादि देवांमध्येंही वासुदेवासारखा कोणीच नाहीं. याकरतां त्वां ही कन्या त्याला द्यावी, असें मला वाटतें ॥ २४ ॥ नारदाचें वाक्य ऐकून हिमवान् ह्मणाला सर्व देवांत भगवान् वासुदेव स्वतः माझी कन्या मागतो आणि आपण असें करावें ह्मणतां तर मला तसें केलें पाहिजे ॥ २५ ॥ याप्रमाणें हिमाचलाचें वचन ऐकून नारदऋषि

वासुदेवसमोनास्तिब्रह्मविष्णुशिवादिषु ॥ तस्मैदेयात्वयाकन्याअत्रार्थेसंमतं मम ॥ २४ ॥ हिमवानुवाच ॥ ॥ वासुदेवःस्वयंदेवःकन्यांप्रार्थयतेयदि॥ तदामयाप्रदातव्यात्वदागमनगौरवात् ॥ २५ ॥ इत्येवंगदितंश्रुत्वानभस्यंत र्दधेमुनिः ॥ ययौपीतांबरधरंशंखचक्रगदाधरं ॥ कृतांजलिपुटोभूत्वामुनींद्र स्तमभाषत ॥ २६ ॥ ॥ नारदउवाच ॥ ॥ शृणुदेवभवत्कार्यंविवाहोनिश्चि तस्तव ॥ इत्युक्त्वानारदोवाक्यंतत्रैवांतरधीयत ॥ २७ ॥

तेथल्या तेथेंच आकाशांत गुप्त होऊन, पीतांबर नेसलेला व शंखचक्रादि आयुधांनीं विराजित अशा भगवान् विष्णूजवळ गेला ॥ २६ ॥ आणि हात जोडून सांगूं लागला. नारद ह्मणला भग- वन्, म्यां तुमचें कार्य केलें तें ऐका. तुमच्या विवाहाचा निश्चय करून आलों आहें. याप्रमाणें



विष्णुला सांगून नारद तेथेंच गुप्त झाला ॥ २७ ॥ इकडे हिमाचल मोठ्या आनंदानें आपल्या कन्येस ह्मणाला, मुली, तुला भगवान् गरुडध्वज विष्णु याला द्यावें असा निश्चय केला आहे ॥ २८ ॥ असें बापाचें बोलणें ऐकून ती आपल्या सखीच्या घरीं गेली आणि तेथें अत्यंत दुः- खित होत्साती भूमीवर आंग टाकून विलाप करूं लागली. तेव्हां तिची सखी तिला ह्मणाली

हिमवांस्तुतदागौरीमुवाचवचनंमुदा ॥ दत्तासित्वंमयापुत्रिदेवेतुगरुडध्वजे ॥ २८ ॥ श्रुत्वावाक्यंपितुर्देवीगतासासखिमंदिरम् ॥ भूमौपतित्वासातत्रवि ललापातिदुःखिता ॥ विलपंतींतदादृष्ट्वासखीवचनमब्रवीत् ॥ २९ ॥ ॥ ॥ सख्युवाच ॥ किमर्थंदुःखितादेविकथयस्वममाग्रतः ॥ यद्भवत्याभिलषि तंकरिष्येहंनसंशयः ॥ ३० ॥ ॥ पार्वत्युवाच ॥ सखिशृणुममप्रीत्यामनोभिल षितंमया ॥ महादेवंचभर्तारंकरिष्येहंनसंशयः ॥ ३१ ॥

॥ २९ ॥ सखी ह्मणते हे देवि, तूं अशी कां दुःखित झाली आहेस तें मला सांग. जें तुझ्या मनांत इष्ट असेल तें मी साधून देईन यांत कांहीं संशय नाहीं ॥ ३० ॥ पार्वती ह्मणाली, सखे, तूं मजवर फार लोभ करितेस, तेव्हां माझ्या मनांत कोणती गोष्ट आली आहे ती मी तुला सां-

गतें. मीं महादेवालाच पति करावा असा माझा निश्चय आहे ॥ ३१ ॥ असें असून माझें चिंतित कार्य माझ्या पित्यानें अन्यथा केलें ह्मणून, मी आतां ह्या देहाचा त्याग करितें ॥ ३२ ॥ पार्वतीचें भाषण ऐकून सखी ह्मणाली, तुझ्या पित्याला जो प्रदेश माहित नाहीं अशा अरण्यांत आपण जाऊं ह्मणजे झालें. ॥ ३३ ॥ याप्रमाणें तुह्मीं दोघींनीं एक विचार केला व त्या सखीनें तुला

**एतन्मेचिंतितंकार्यंतातेनकृतमन्यथा ॥ तस्माद्देहपरित्यागंकरिष्येहंसखिप्रिये ॥ ३२ ॥ पार्वत्यावचनंश्रुत्वासखीवचनमब्रवीत् ॥ ॥ सख्युवाच ॥ ॥ पितायत्रनजानातिगमिष्यावोहितद्वनं ॥ ३३ ॥ इत्येवंसंमतंकृत्वानीतासित्वंमहद्वनं ॥ पितानिरीक्षयामासहिमवांस्तुगृहेगृहे ॥ ३४॥ केननीतास्तिमेपुत्रीदेवदानवकिन्नरैः ॥ नारदाग्रेकृतंसत्यंकिंदास्येगरुडध्वजे ॥ ३५ ॥**

एका मोठ्या अरण्यांत नेलें. इकडे तुझा पिता हिमाचल घरोघर फिरून तुझा शोध करूं लागला ॥ ३४ ॥ आणि मनांत ह्मणूं लागला कीं, माझी मुलगी कोणीं देवांनीं किंवा दानवांनीं किंवा किन्नरांनीं नेली असावी ! मीं ती विष्णूला देण्याचें नारदाजवळ कबूल केलें आहे आतां वि-



ष्णूला काय द्यावें ॥ ३५ ॥ याप्रमाणें चिंताकुल होऊन तुझा पिता मूर्च्छित होऊन पडला, तेव्हां लोक हाहाकार करून हिमाचलाजवळ धांवत आले ॥ ३६ ॥ आणि त्यास ह्मणाले कीं, महाराज, आपल्याला एकाएकीं अशी मूर्च्छा आली याचें कारण काय तें सांगा. हिमाचल ह्मणाला, लोक हो, मला असह्य दुःख झालें याचें कारण ऐका. आज माझें कन्यारत्न हरवलें ॥३७॥

**इत्येवंचिंतयाविष्टोमूर्च्छितोनिपपातह ॥ हाहाकृत्वाप्रधावंतिलोकास्तेगिरिपुंगवम् ॥ ३६ ॥ ऊचुर्गिरिवरंसर्वेमूर्च्छाहेतुंगिरेवद ॥ ॥ गिरिरुवाच ॥ ॥ दुःखस्यहेतुंश्रृणुतकन्यारत्नंहृतंमम ॥ ३७ ॥ दुष्टावाकालसर्पेणसिंहव्याघ्रेणवाहता ॥ नजानेक्कगतापुत्रीकेनदुष्टेनवाहृता ॥ ३८ ॥ चकंपेशोकसंतप्तोवातेनेवमहातरुः ॥ गिरिर्वनाद्वनंयातस्तदालोकनकारणात् ॥ ३९ ॥**

तिला कालसर्पानें दंश केला किंवा सिंह अथवा वाघ यांनीं तिला मारिलें अथवा ती आपण होऊन कोठें गेली किंवा कोणीं दुष्टानें तिला पळवून नेलें हें कांहीं समजत नाहीं ॥ ३८ ॥ याप्रमाणें दुःखाचें कारण सांगून मोठ्या वाऱ्यानें वृक्ष कांपतो त्याप्रमाणें त्या दुःखानें हिमाचल कांपूं लागला. आणि मुलीला शोधण्याकरितां एका अरण्यांतून दुसऱ्या अरण्यांत असा फिरूं ला-

गला. शोध करीत जों चालला ॥ ३९ ॥ तों जातां जातां सिंह व्याघ्र अस्वलें मृग यांनीं व्याप्त अशा अरण्यांत येऊन पोंचला. इकडे तूंही सखीसहवर्तमान घरांतून जी निघालीस ती जातां जातां मोठ्या घोर अरण्यांत आलीस ॥४०॥ तों तेथें एक रम्य नदी तुझ्या दृष्टीस पडली, तिच्या

**सिंहव्याघ्रैश्चभल्लैश्चरोहिभिश्चमहावनं ॥त्वंचापिविपिनेघोरेव्रजंतीसखिभिःसह ॥ ४० ॥ तत्रदृष्टानदींरम्यांतत्तीरेचमहागुहाम् ॥ तांप्रविश्यसखीसार्धमन्नभोगविवर्जिता ॥ ४१ ॥ संस्थाप्यवालुकालिंगंपार्वत्यासहितंमम ॥ भाद्रशुक्लतृतीयायामर्चयंतीतुहस्तभे ॥ ४२ ॥**

कांठीं एक मोठी गुहा होती; त्या गुहेंत तूं सखीसहवर्तमान प्रवेश करून अन्न पाणी इत्यादि सर्व भोग वर्ज करून ॥ ४१ ॥ तेथें आपणासहित माझें वाळूचें लिंग स्थापून त्वां माझें पूजन केलें



१ येथें स्वतः महादेव पार्वतीला ही कथा सांगत असून पार्वतीसहवर्तमान तूं माझें पूजन केलेंस असें ह्मटलें याविषयीं कोणालाही शंका येईल. पण वस्तुतः शंकेला मुळींच अवसर नाहीं. कारण भगवान् शंकर अनंत व अविनाशी, आजपर्यंत शेंकडों प्रलय होऊन पुनः सृष्टि झाली आहे हा सृष्टिप्रलयाचा क्रम एकसा-

त्या दिवशीं भाद्रपद मासांतील शुक्ल तृतीया होती व हस्तनक्षत्र होतें ॥ ४२ ॥ रात्रीं तेथें गीत वाद्यें यांनीं युक्त त्वां जागरण केलें, याप्रमाणें त्वां व्रत केलें त्याच्या प्रभावानें येथें माझें आसन हाललें ॥४३॥ तेव्हां सख्यांसहवर्तमान तूं जेथें व्रत करीत बसली होतीस तेथें अकस्मात् मी प्राप्त

**तत्रवाद्येनगीतेनरात्रौजागरणंकृतं॥व्रतराजप्रभावेनआसनंचलितंमम॥४३॥ संप्राप्तोहंतदातत्रयत्रत्वंसखिभिःसह ॥ प्रसन्नोस्मिमयाप्रोक्तंवरंब्रूहिवरानने ॥ ४४ ॥ ॥ पार्वत्युवाच ॥ ॥ यदिदेवप्रसन्नोसिभर्ताभवमहेश्वर ॥ तथेत्युक्त्वातुसंप्राप्तःकैलासंपुनरेवच ॥ ४५ ॥**

झालों आणि तुला ह्मणालों कीं, हे वरानने, मी तुला प्रसन्न झालों आहें, तर तूं पाहिजे तो वर माग ॥ ४४ ॥ तेव्हां तूं ह्मणालीस, हे देवा महेश्वरा, जर तूं प्रसन्न झाला आहेस तर तूं माझा

रखा चाललाच आहे. तेव्हां प्रत्येक सृष्टींत भगवान् शंकर आपलें सगुणरूप धारण करून पार्वतीसह क्रीडा करितो ह्मणून पूर्वसृष्टींतला सांप्रत आपला आपणच इतिहास सांगत आहे असें समजावें. प्रत्येक कल्पारंभीं सर्वज्ञ परमेश्वर प्रथम ब्रह्मा, विष्णु, शिव, अशीं रूपें घेतो असें पुराणमत आहे. याप्रमाणें शिवाला पूर्वकल्पवृत्त सर्वदा ज्ञात आहे. त्यामुळें ही पूर्वकल्पांतील कथा पार्वतीला सांगितली असें मानतात.

पति हो. असें तूं बोललीस तेव्हां मी, फार चांगलें आहे असें ह्मणून पुन्हा कैलासपर्वतीं आलों ॥ ४५ ॥ नंतर प्रातःकाल होतांच त्वां नदींत माझ्या लिंगाचें विसर्जन करून, सखीसहवर्तमान आरंभिलेल्या व्रताचें तेथेंच पारणें केलें ॥ ४६ ॥ हिमाचलही तुझा शोध करीत त्या गहन अरण्यांत आला आणि चहूंकडे पाहूं लागला, परंतु त्याला तूं दृष्टीस न पडल्यामुळें विव्हल हो-

ततःप्रभातेसंप्राप्तेनद्यांकृत्वाविसर्जनं ॥ पारणंतुकृतंतत्रसख्यासार्धंत्वयाशुभे ॥ ४६ ॥ हिमवानपितंदेशमाजगामघनंवनं ॥ चतुराशानिरीक्षंस्तुविह्वलः पतितोभुवि ॥ ४७ ॥ दृष्ट्वातत्रनदीतीरेप्रसुप्तंकन्यकाद्वयं ॥ उत्थाप्योत्सं गमारोप्यरोदनंकृतवान्गिरिः ॥ ४८ ॥ सिंहव्याघ्राहिभल्लूकैर्वनेदुष्टेकुतःस्थिता ॥ ॥ पार्वत्युवाच ॥ शृणुतातमयाज्ञातंत्वंदास्यसीश्वरायमां ॥ ४९ ॥

ऊन भूमीवर पडला ॥ ४७ ॥ कांहीं वेळानें पुनः तुझा शोध करीत पुढें निघाला. तों नदीच्या तीरीं दोन मुली निजलेल्या त्याच्या दृष्टीस पडल्या. तेव्हां त्यांस उठवून मांडीवर घेऊन रडूं लागला ॥ ४८ ॥ आणि ह्मणाला कीं, मुली, सिंह, वाघ, सर्प, आस्वलें इत्यादिकांनीं भयंकर अशा



या घोर अरण्यांत तूं कां येऊन राहिलीस ? पित्याचा प्रश्न ऐकून पार्वती ह्मणाली; बाबा, ऐक. तूं माझा शंकराशीं विवाह करशील असें मीं पूर्वीं जाणलें होतें ॥ ४९ ॥ पण त्वां पूर्वींचा बेत फिरविला ह्मणून मी वनांत आल्यें. बाबा, जर तूं मला शंकराला अर्पण करशील तर मी घरीं येईन ॥ ५० ॥ नाहीं तर येथेंच राहावें असा माझा निश्चय झाला आहे. पित्यानें तुझ्या

तदन्यथाकृतंताततेनाहंवनमागता ॥ ददासिताततयदिमामीश्वरायतदागृहं ॥ ५० ॥ आगमिष्यामिनैवंचेदिहस्थास्यामिनिश्चितम् ॥ तथेत्युक्त्वाहिमवता नीतासित्वंगृहंप्रति ॥ ५१ ॥ पश्चाद्दत्तात्वमस्माकंकृत्वावैवाहिकींक्रियां ॥ तेन व्रतप्रभावेणसौभाग्यंसाधितंत्वया ॥ ५२ ॥ अद्यापिव्रतराजस्तुनकस्यापिनिवेदितः ॥ नामास्यव्रतराजस्यशृणुदेवियथाभवत् ॥ ५३ ॥

ह्मणण्याप्रमाणें करतों असें सांगून तुला घरीं नेलें ॥ ५१ ॥ नंतर त्यानें यथाविधि विवाह करून तुला मजकारणें अर्पण केलें. तात्पर्य कीं जें त्वां व्रत केलें त्याच्या प्रभावानें त्वां सौभाग्य मिळविलें ॥ ५२ ॥ हें उत्तम व्रत अद्यापि कोणालाही सांगितलें नाहीं. हे देवि, ह्या व्रताचें नांव कसें झालें

तें तुला सांगतों ऐक ॥ ५३ ॥ आलि ह्मणजे सख्या त्यांनीं तुझें हरण केलें ह्मणजे तुला दूर नेलें ह्मणून या व्रताला हरितालिका असें नांव पडलें. याप्रमाणें महादेवाचें भाषण ऐकून पार्वती ह्मणाली. भगवन्, आपण ह्या व्रताचें नांव सांगितलें पण याचा विधि कृपा करून मला सांगा ॥ ५४ ॥ आणि या व्रतापासून कोणतें पुण्य व काय फल मिळतें आणि हें व्रत कोणीं करावें



आलिभिर्हरितायस्मात्तस्मात्साहरितालिका ॥ ॥ देव्युवाच ॥ ॥ नामेदं कथितंदेवविधिंवदममप्रभो ॥ ५४ ॥ किंपुण्यंकिंफलंचास्यकेनचक्रियतेव्रतम् ॥ ॥ ईश्वरउवाच ॥ ॥ शृणुदेविविधिंवक्ष्येनारीसौभाग्यहेतुकम् ॥५५॥ करिष्यतिप्रयत्नेनयदिसौभाग्यमिच्छति ॥ तोरणादिप्रकर्तव्यंकदलीस्तंभमंडितं ॥ ५६ ॥

तें मला सांगा. पार्वतीचा प्रश्न ऐकून महादेव ह्मणाले; हे देवि, मी या व्रताचा विधि सांगतों तो ऐक ॥ ५५ ॥ हें व्रत स्त्रियांच्या सौभाग्यास कारण आहे ह्मणून सौभाग्य इच्छिणाऱ्या स्त्रियांनीं करावें, केळींच्या खांबांनीं सुशोभित असें तोरण लावून मखर करावें ॥ ५६ ॥ छत



लावून चित्रविचित्र रंगांच्या उत्तम उत्तम पट्टवस्त्रांनीं सुशोभित करावें. सुवासिक चंदनानें तें मखर सुगंधित करावें ॥ ५७ ॥ शंख, चौघडा, नगारा, मृदंग इत्यादि वाद्यांचा गजर करून त्या माझ्या पूजेच्या ठिकाणीं नानाप्रकारचें मंगलगीत गावें ॥ ५८ ॥ नंतर पार्वतीसह माझी वालु-

आच्छाद्यपट्टवस्त्रैस्तुनानावर्णविचित्रितैः ॥ चंदनेनसुगंधेनलेपयेद्गृहमंडपं ॥ ५७ ॥ शंखभेरीमृदंगैस्तुकारयेद्बहुनिःस्वनान् ॥ नानामंगलगीतंचकर्तव्यंममसद्मनि ॥ ५८ ॥ स्थापयेद्वालुकालिंगंपार्वत्यासहितंमम ॥ पूजयेद्बहुपुष्पैश्चगंधधूपादिभिर्नवैः ॥ ५९ ॥ नानाप्रकारैर्नैवेद्यैः पूजयेज्जागरंचरेत् ॥ नालिकेरैःपूगफलैर्जंबीरैर्बहुभिस्तथा ॥ ६० ॥ बीजपूरैःसनारिंगैःफलैश्चान्यैश्चभूरिशः ॥ ऋतुकालोद्भवैर्भूरिप्रकारैःकंदमूलकैः ॥ ६१ ॥

केची मूर्ति करून, नवीन अशा गंध, धूप, फल, पुष्प इत्यादि उपचारांनीं माझें पूजन करावें ॥ ५९ ॥ नानाप्रकारचे नैवेद्य अर्पण करावे. रात्रीं जागरण करावें. नारळ, सुपाऱ्या अनेक प्रकारचीं निंबें, ॥ ६० ॥ पेरु, महाळुंगें, नारिंगें, इत्यादि अनेक, जीं त्या ऋतूंत उत्पन्न झालीं

असतील तीं उत्तम उत्तम फलें व नानाप्रकारचीं कंदमुळें मला अर्पण करावीं ॥ ६१ ॥ आणि चंदन, पुष्पें, धूप, दीप इत्यादि उपचार पुढें सांगितलेल्या मंत्रानें अर्पण करावे ॥ मंत्रार्थः ॥ ज्याचें स्वरूप शांत, ज्याला पांच मुखें आहेत, ज्यानें हातांत शूल धारण केला आहे अशा शिवाला नमस्कार असो ॥ ६२ ॥ नंदी, भृंगी, महाकाल इत्यादि सेवकगण ज्याच्या जवळ आहेत,

गंधपुष्पैर्धूपदीपैर्मंत्रेणानेनपूजयेत् ॥ पूजामंत्रः ॥ नमःशिवायशांतायपंचवक्त्रायशूलिने ॥ ६२॥ नंदीभृंगीमहाकालगणयुक्तायशंभवे ॥ शिवायैहरकांतायैप्रकृत्यैसृष्टिहेतवे ॥ ६३ ॥ शिवायैसर्वमांगल्यैशिवरूपेजगन्मये ॥ शिवेकल्याणदेनित्यंशिवरूपेनमोस्तुते ॥ ६४ ॥ भवरूपेनमस्तुभ्यंशिवायैसततंनमः ॥ नमस्तेब्रह्मरूपिण्यैजगद्धात्र्यैनमोनमः ॥ ६५ ॥

अशा भगवान् शंभूला नमस्कार असो. जी मंगलरूपिणी शंकराची प्रिया, प्रकृतिरूप व सृष्टिकारण ॥ ६३ ॥ कल्याणरूप, सर्व मंगलरूप, शिवरूप, व सर्व जगाला व्यापून राहणारी नित्य कल्याण देणारी, शिवरूपिणी देवि, तुला नमस्कार असो ॥ ६४ ॥ हा संसार हेंच जिचें रूप आहे, अशी जी तूं शिवा, त्या तुला सतत नमस्कार असो. ब्रह्मरूप जी तूं त्या तुला नमस्कार

असो. जगाचें पालन करणारी जी तूं त्या तुला पुनः पुनः नमस्कार असो ॥ ६५ ॥ हे सिंहवाहिनी देवि, संसाराच्या भयानें जो संताप होतो त्यापासून माझें रक्षण कर. हे महेश्वरि देवि, ज्या इच्छेनें मीं तुझें पूजन केलें आहे ती माझी इच्छा पूर्ण कर ॥ ६६ ॥ हे आई पार्वति, राज्य, सौभाग्य, संपत्ति हीं मला दे. पार्वती या मंत्रानें मजसहवर्तमान तुझी पूजा करावी

संसारभयसंतापात्त्राहिमांसिंहवाहिनि ॥ येनकामेनदेवित्वंपूजितासिमहेश्वरि ॥ ६६ ॥ राज्यसौभाग्यसंपत्तीर्देहिमामंबपार्वति ॥ इतिपूजामंत्रः ॥ मंत्रेणानेनदेवित्वांपूजयित्वामयासह ॥ ६७ ॥ कथांश्रुत्वाविधानेनदद्यादन्नंचभूरिशः ॥ ब्राह्मणेभ्योयथाशक्तिदेयावस्त्रहिरण्यगाः ॥ ६८ ॥ अन्येषांभूयसीदेयास्त्रीणांवाभूषणादिकं ॥ भर्त्रासहकथांश्रुत्वाभक्तियुक्तेनचेतसा ॥ ६९ ॥

॥ ६७ ॥ नंतर यथाविधि कथा श्रवण करावी. अन्नदान पुष्कळ करावें. ब्राह्मणाला वस्त्रें, हिरण्य, गाई इत्यादि यथाशक्ति द्यावीं ॥ ६८ ॥ इतर ब्राह्मणांला भूयसी दक्षिणा द्यावी. स्त्रियांला अलंकार द्यावे. भर्त्यासहवर्तमान भक्तियुक्त अंतःकारणानें माझी कथा श्रवण करावी ॥ ६९ ॥

याप्रमाणें हें उत्तम व्रत यथाविधि केलें असतां, सर्व पापांपासून मुक्त होऊन सप्त जन्मपर्यंत राज्य मिळून सौभाग्याची वृद्धि होते ॥ ७० ॥ भाद्रपद शुद्ध तृतीयेला जर कोणी स्त्री आहार करील, तर सात जन्मपर्यंत वंध्या होईल व तिला प्रत्येक जन्मीं वैधव्य प्राप्त होईल ॥ ७१ ॥ दारिद्र्य येईल, पुत्रशोक होईल, स्वभावानें अत्यंत कर्कशा होऊन अंतीं दुःखी होईल. जी उपवास कर-

कृत्वाव्रतेश्वरंदेविसर्वपापैःप्रमुच्यते॥सप्तजन्मभवेद्राज्यंसौभाग्यंचैववर्धते ७० तृतीयायांतुयानारीआहारंकुरुतेयदि ॥ सप्तजन्मभवेद्वंध्यावैधव्यंजन्मजन्मनि ॥७१॥ दारिद्र्यंपुत्रशोकंचकर्कशादुःखभागिनी ॥ पच्यतेनरकेघोरेनोपवासंकरोतिया ॥७२॥ राजतेकांचनेताम्रेवैणवेचाथमृन्मये ॥ भाजनेविन्यसेदन्नंसवस्त्रफलदक्षिणं ॥ वायनंद्विजवर्यायदद्यादंतेचपारणाम् ॥ ७३ ॥

णार नाहीं ती भयंकर नरकांत पडेल ॥ ७२ ॥ दुसरे दिवशीं पारण्याचे वेळीं सोन्याचें, रुप्याचें, तांब्याचें, वेळूचें अथवा मातीचे, जसें जिला अनुकूल असेल तसें पात्र घेऊन त्यांत डाळ तांदूळ वगैरे भोजनाचे पदार्थ घालून वस्त्र फलें व दक्षिणा यांसह तें वायन उत्तम ब्राह्मणाला दान



करावें आणि नंतर पारणें करावें ॥ ७३ ॥ पार्वती, याप्रमाणें जी स्त्री हें व्रत करील ती तुझ्यासारखी आपल्या भर्त्यासह रममाण होईल व इहलोकीं अनेक उत्तम भोग भोगून अंतीं शंकराचें सायुज्य तिला प्राप्त होतें ॥ ७४ ॥ हजारों अश्वमेध व शेंकडों वाजपेय यज्ञ केल्यानें जें फल प्राप्त व्हावयाचें तें ह्या कथाश्रवणाच्या योगानें मनुष्यांला प्राप्त होतें ॥ ७५ ॥ महादेव ह्मणतात हे

एवंविधिंयाकुरुतेचनारीत्वयासमानारमतेचभर्त्रा ॥ भोगाननेकान्भुविभुज्यमाना सायुज्यमंतेलभतेहरेण ॥७४॥ अश्वमेधसहस्राणिवाजपेयशतानिच ॥ कथाश्रवणमात्रेणतत्फलंप्राप्यतेनरैः ॥ ७५ ॥ एतत्तेकथितंदेवितवाग्रेव्रतमुत्तमं ॥ कोटियज्ञकृतंपुण्यमस्यानुष्ठानमात्रतः ॥७६॥ इतिश्रीभविष्योत्तरपुराणेहरगौरीसंवादेहरितालिकाव्रतकथासमाप्त ॥

देवि, याप्रमाणें हें तुला उत्तम व्रत निवेदन केले. केवळ ह्या व्रताच्या आचरणानें कोट्यवधि यज्ञ केल्याचें फळ प्राप्त होतें ॥ ७६ ॥ इति श्रीभविष्योत्तरपुराणे हरगौरीसंवादे हरितालिकाव्रतकथायां महाराष्ट्रभाषाविवृतिः समाप्तिमगमत् ॥

# निर्णयसागरयन्त्रालये विक्रेयानि संस्कृतपुस्तकानि.

## ब्रह्मकर्मसमुच्चय–ऋग्वेदी.

( विषय ३८८ ) विशेष सुधारून छापलेली चौथी आवृत्ति. हा ग्रंथ भिक्षुकवर्गाच्या संग्रहीं असणें मोठ्या अगत्याचें आहे. किंमत २ । रु० ट. ख. ।≈

## ब्रह्मकर्मसमुच्चय–हिरण्यकेशी.

( विषय ३८८ ) हें पुस्तक संस्काररत्नमाला, महेश्वरभट्टी, शंकरभट्टी, सिंधु, प्रतापनारसिंह, व्रतकौमुदी, प्रतिष्ठावासुदेवी, शांतिरत्न व हिरण्यकेशी अंत्येष्टि यांच्या आधारानें नवीन तयार केलें आहे. यांत १ आह्निक, २ संस्कार, ३ मिश्र ( इष्टापूर्तकर्म ) व ४ अंत्येष्टि साग्र अशीं चार प्रकरणें आलीं आहेत. पहिल्या प्रकरणांत अनेक तऱ्हेचे श्राद्धप्रयोग, दुसऱ्यांत जननशांति, तिसऱ्यांत व्रतोद्यापनें, स्थिर व चलप्रतिष्ठा, आरामकूपादि उत्सर्ग, पुरश्चरणें व कित्येक शांति आणि चौथ्यांत सर्वप्रायश्चित्तापासून पांक्त अंत्येष्टिप्रयोग संन्यासपद्धति वगैरे बहुधा सर्व उपयुक्त विषय आले आहेत. प्रयोगांत लागणारीं रंगीत व साधीं नानाप्रकारचीं मंडलें आरंभीं दिलीं आहेत. व शिवाय कित्येक उपयुक्त कोठे त्या त्या प्रयोगास जोडले आहेत. यांतील पाहिजे तो मंत्र किंवा अनुवाक तावडतोब सांपडावा ह्मणून अकारादिकोश आरंभीं दिला आहे. या समुच्चयानें भिक्षुकब्रह्मवृंदाला कोणताही प्रयोग अनायासें करतां येईल. .... .... २। ।≈

## पूजासमुच्चय.

( विषय १०५ ) दुसरी आवृत्ति. हें पुस्तक "ब्रह्मकर्मसमुच्चया" चें परिशिष्ट आहे. यांत संवत्सरप्रतिपदेपासून बारमाहीं लागणाऱ्या नित्य, नैमित्तिक व काम्यव्रतांच्या अनेक पूजा आल्या आहेत. शेवटीं गणपति आदिदेवांच्या उपलब्ध असलेल्या बहुतेक अष्टोत्तरशतनामावली व सहस्रनामावलीही जोडल्या आहेत. .... .... .... .... किंमत ।॥ ट. ख. ८≡

## संस्कृत मूळश्लोक असून मराठींत भाषांतर केलेलीं पुस्तकें.

| | | |
|---|---|---|
| अनंतचतुर्दशी पूजा व सार्थ कथा. .... .... .... .... | ८≡ | ८॥ |
| ऋषिपञ्चमीपूजा व सार्थ कथा. .... .... .... .... .... | ८= | ८॥ |
| पिठोरीव्रतपूजा व सार्थ कथा. .... .... .... .... .... | ८= | ८॥ |
| वटसावित्री पूजा व सार्थ कथा. .... .... .... .... | ८≡ | ८॥ |
| वामनद्वादशीपूजा व सार्थ कथा. .... .... .... .... | ८= | ८॥ |
| सत्यनारायणपूजा व सार्थ कथा. .... .... .... .... | ८=॥ | ८॥ |
| सिद्धिविनायकपूजा व सार्थ कथा. .... .... .... .... | ८≡ | ८॥ |
| सोमवतीपूजा व सार्थ कथा. .... .... .... .... .... | ८= | ८॥ |

| | | | | | | |
|---|---|---|---|---|---|---|
| सत्यविनायकपूजा व सार्थ कथा. | .... | .... | .... | .... | ।· | ऽ/ |
| संकष्टचतुर्थीपूजा व सार्थ कथा. .... | .... | .... | .... | .... | ऽ≡ | ऽ॥ |
| वरलक्ष्मीपूजा व सार्थ कथा. .... | .... | .... | .... | .... | ऽ= | ऽ॥ |
| मंगळागौरीपूजा व सार्थ कथा .... | .... | .... | .... | .... | ऽ≡ | ऽ॥ |
| जन्माष्टमीपूजा व सार्थ कथा. .... | .... | .... | .... | .... | ऽ= | ऽ॥ |
| शिवरात्रिपूजा व सार्थ कथा. .... | .... | .... | .... | .... | ।· | ऽ/ |

हें पुस्तक मुंबईंत तुकाराम जावजी यांचें "निर्णयसागर" छापखान्यांत
रामचंद्र येसू सेडगे यांनीं मालकाकरितां छापून प्रसिद्ध केलें.
शके १८३६, सन १९१५.

Publisher:—Tukaram Javaji. } at the "Nirnaya-sagar Press,'
Printer:—Ramchandra Yesu Shedge. } 23 Kolbhat Lane, Bombay.



॥ हरितालिकापूजा सार्थकथा
समाप्ता ॥